अथ ग्रंथालंकारः ॥ बभूव पूर्वं मरुधन्वदेशे बिकोजि-
नामा नृपतिर्महात्मा॥तस्यैव नाम्ना खलु राजधानी लोके
बिकानेर इति प्रसिद्धा ॥ १ ॥ तदन्तरे लेखपुरोपमे पुरे
श्रीरत्नदुर्गे सुजनैः सुसेविते ॥ आसीद्वसिष्ठान्वयगौड-
विप्रो माध्यंदिनीयो बुधजीवराजः ॥ २ ॥ विवृद्धमानो
विदुषां समाजे विज्ञैर्नरैः सर्वसमृद्धिभोक्ता ॥ तस्यात्मजा
बाणमितास्तु सद्गुणाः सुवेदवेदांगचणाः सुशीलाः ॥३॥
आयातयातद्विजशुद्धचत्वरा वीर्येण सन्ताडितवैरि-
दुर्जनाः ॥ एतेषु मध्ये गुरुरामकृष्णो ज्ञानेन स्वल्पी-
कृतसर्वतृष्णः ॥ ४ ॥ स्वबुद्धितः खण्डितवैरिप्रश्नः सुभ-
क्तिसतर्पितदेवकृष्णः ॥ तस्याऽभवन्नाम ३ मिताः सुपुत्राः
स्वधर्मयायिस्वकलत्रमित्राः ॥ ५ ॥ गृहेषु संलेखितर-
म्यचित्राः श्रीकान्तपूजानिरताः पवित्राः ॥ इमानि
नामानि भवन्ति तेषां चतुर्भुजाख्यो विबुधो हि ज्येष्ठः
॥ ६ ॥ कस्तूरिचन्द्राभिधसज्जनोऽपरोऽपरोगुणैर्मण्डित-
ज्येष्ठरामः ॥ तत्रस्थिता मध्यमपक्तिपादे कस्तूरिचन्द्रा-
ख्यमहत्सुशीलाः ॥ ७ ॥ तेषां सुपुत्रावनवद्यवंद्यविद्या-
न्वितौ द्वौ नितरामभूताम्॥चतुर्थिलालाख्यगुरुसुखाख्यौ
सुज्ञौ गुणेनार्दितदुष्टदर्पौ ॥ ८ ॥ ज्येष्ठस्तथायं खलु

पण्डिताग्रणीः षट्शास्त्रवेत्ता द्विजकर्मतत्परः॥ परोपकारी द्विजदेवभक्तो हुतावशिष्टान्नसदानुरक्तः ॥ ९ ॥ एतादृशो गौडकुले बभूव चतुर्थिलालो निजधर्मपालः ॥ श्रीसाम्बपादाब्जविलग्नचित्तः शिष्टानुयायी च निबन्धकर्ता ॥ १० ॥ धर्मशास्त्रेषु निष्णातः कर्मकाण्डस्य मर्मवित् ॥ ज्योतिर्वेत्ता भिषक्छ्रेष्ठो नानागौडनिबंधकृत् ॥ ११ ॥ तेनेयं रचिता माला द्विजानां नित्यकर्मणाम् ॥ अनया प्रीयतां शंभुर्भवान्या सह सर्वदा ॥ १२ ॥ रसवेदांकभूमिते ऽब्दे विक्रमादित्यसंज्ञके ॥ वैशाखशुक्लपंचम्यां पूर्णा मालाऽभवच्छुभा ॥ १३ ॥

इति श्रीबीकानेरराज्यान्तर्गतश्रीरत्नगढनिवासिना श्रीवसिष्ठगोत्रोद्भवेन पंडितश्रीरामकृष्णामरचंद्रशर्मणां पौत्रेण श्रीकस्तूरिचंद्रात्मजेन श्रीचतुर्भुजदत्तसूनुना श्रीमहादेवभक्तवाञ्छलेपिना गौडवंशावतंसद्वादशमहानिबंधकर्त्रा पं० श्रीचतुर्थीलाल ( चौथमल ) शर्मणा विरचिता नित्यकर्मप्रयोगमाला समाप्ता ॥ शुभमस्तु ॥

---

पुस्तक मिलनेका ठिकाना—
खेमराज श्रीकृष्णदास,
"श्रीवेंकटेश्वर" स्टीम् प्रेस—बम्बई.